द्विमात्रनुक्तौ मात्रौ स्यात्तथा ह्रस्वस्तु द्विकिमः ।
इति परिभाषणात् ।

**मूर्ध्न्युदात्तः ॥ ५ ॥** मूर्ध्नि मुखप्रदेशे उदात्तः प्रदर्शनीयः । मुखस्यापि मस्तकावयवत्वप्रसिद्धेः । निष्कृष्टार्थः पूर्ववत् ।

**श्रुतिमूले स्वरितः ॥ ६ ॥** दक्षिणकर्णमूले स्वरितः प्रदर्शनीय इत्यर्थः । क्रमेणैषामुदाहरणानि—वायवस्थेत्यत्र पूर्ववकारोत्तराकारोऽनुदात्तः, यकारोत्तराकार उदात्तः, उत्तरवकारोत्तराकारः स्वरितः ।

**एवं जात्यादयोऽभिहिताः ॥ ७ ॥** यथा प्रचयस्य स्वरितभेदस्य प्रातिशाख्येऽभिधानम् एवं जात्यादयोऽपि स्वरितभेदास्तत्रैवाभिहिताः उक्ताः, अतोऽत्र नोच्यन्ते इति भावः ।

**ब्राह्मणेतूदात्तानुदात्तौ भाषिकस्वारौ ॥ ८ ॥** ब्राह्मणे पूर्वोक्ते ब्रह्मसुपैष्यन्नित्यादिभागे तु उदात्तानुदात्तौ भाषिकलक्षणलक्षितौ—स्वरावेव स्वारौ स्वार्थे अण् , तेन स्वरितस्य व्यावृत्तिः—हृदि मूर्ध्नि च भवत इति अनुवृत्त्या लभ्यते ।

**तानस्वराणि छन्दोवत्सूत्राणि ॥ ९ ॥** सूत्राणि—कल्पाः "अथातोऽधिकारः" इत्यादयः । शृङ्गग्राहिकान्यायेन अन्यान्यपि शिक्षादीनि वेदाङ्गानि छन्दोवत् छन्दसा तुल्यानि, भवन्ति, स्वरसंस्कारनियमे इति शेषः । उदात्तादिस्वरबाधनार्थं *तानस्वराणीति । तान एकश्रुतिः स्वरो येषां तानि । तथा च तत्र नोदात्तादिप्रवृत्तिरिति भावः । कं० ॥ १ ॥

**अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य, संयुक्तस्यापि रेफोष्मान्त्याभ्यामृकारेण चाविशेषेणादिमध्यावसानेषूच्चारणे जकारोच्चारणम् ॥१॥**

अथ—स्वरनिरूपणानन्तरम् , संस्कारप्रक्रिया उच्यते इति शेषः । अन्तस्थानां—यरलवानाम् आद्यस्य—यकारस्य पदादौ विद्यमानस्य—जकारोच्चारणम् इत्युत्तरेणान्वयः, कर्त्तव्यमिति शेषः । यथा "युञ्जानः प्रथमम्" इत्यादौ । पदादिस्थस्येत्युक्त्या विय

इत्यादौ नातिप्रसङ्गः । तस्माद्यज्ञादित्यादावतिप्रसङ्गवारणायाह—*अन्ये इति । अन्येन हला असंयुक्तस्य संयोगमप्राप्तस्येत्यर्थः । घृताचीर्यन्तु हर्यतेत्यादौ पदादिस्थत्वाभावाज्जकारोच्चारणं न स्यादतस्तत् पुनर्विशिनष्टि *संयुक्तस्यापीति । रेफो रकारः, ऊष्मणामन्त्यो हकारः ताभ्यां युक्तस्यापि जकारोच्चारणम् । तथा च पूर्वोदाहरणेऽपि तत्सिद्धिः । अत्रापि "अविशेषेण आदिमध्यावसानेषु" इति सम्बद्ध्यते । तेन—घृताचीर्यन्तु हर्यत, सूर्य बडा इत्यादिषु सर्वत्र जकारोच्चारणं भवति । कृणुध्वं वरं, गेह्यायच, महाँवेदाभूया इत्यादीनि हकारयोगोदाहरणानि ज्ञेयानि । अन्यहलसंयुक्तस्येति काकाक्षिगोलकन्यायेन अत्रापि सम्बध्यते । तेन अग्निर्ज्योतिरित्यादौ नातिप्रसङ्गः । ऋकारेण संयुक्तस्यापि जकारोच्चारणमविशेषेण अत्र अन्यहलसंयुक्तस्येति न सम्बध्यते, रेफोष्मान्त्याभ्यां पृथक्पाठसामर्थ्यात् । तेन सद्योऽस्यृतस्येत्यत्र सकारयोगेऽपि जकारोच्चारणं सिद्ध्यति ।

द्विर्भावेऽप्येवम् ॥ २ ॥ याय्या इत्यादौ जकारोच्चारणसिद्ध्ये इदम् ।

**अथापरान्तस्थस्यायुक्तान्यहलः संयुक्तस्योष्मऋकारैरेकारसहितोच्चारणम् ॥ ३ ॥**

अथ—आद्यान्तस्थादेशकथनानन्तरम् अपरान्तस्थस्य-रेफस्य, अयुक्तः योगमप्राप्तः अन्यहल् यस्मिन् तादृशस्य, ऊष्मभिः ऋकारेण वा युक्तस्य एकारसहितोच्चारणं, कर्तव्यमिति शेषः पूर्ववत् । यथा दर्शतमित्यत्र दरेशतमिति पाठः, न तु रेफमात्रघटितः । एवं वर्षो, वर्षीयसि, बर्हिरसि, इत्यादावपि बोध्यम् । वर्ष्यायच, यज्ञपतिर्हार्षीत् , इत्यादावन्यहलः यकारस्य वकारस्य वा संयोगान्न एकारसहितोच्चारणम् ।

**एवं तृतीयान्तस्थस्य क्वचित् ॥ ४ ॥** तृतीयान्तस्थस्य लकारस्यापि क्वचिल्लक्ष्यानुरोधेन एकारसहितोच्चारणम् । यथा—"शतवल्शाविरोहतात्" इत्यादौ "शतवलेशा" इति पाठः ॥

ऋकारस्य तु संयुक्तासंयुक्तस्याविशेषेण सर्वत्रैव-म् ॥ ५ ॥ एकारसहितोच्चारणादेशमङ्गादिवत् । संयुक्तासंयुक्तस्य अविशेषेण सर्वत्र—आदिमध्यावसानेषु एकारसहितोच्चारणम् । ऋतावाट्, सृज प्रशस्त, कृणुहि, सामान्यृषिभिरित्यादीन्युदाहरणानि बोध्यानि ॥

अथान्त्यस्यान्तस्थानां पदादिमध्यान्तस्थस्य त्रिविधं गुरुमध्यमलघुवृत्तिभिरुच्चारणम् ॥ ६ ॥

अथ—तृतीयान्तस्थादेशकथनानन्तरम् अन्तस्थानामन्त्यस्य—वकारस्य त्रिविधं—त्रिप्रकारं गुरुमध्यलघुवृत्तिभिरुच्चारणं कर्तव्यमित्युच्यते । एतच्च पदादिक्रमेण ज्ञेयम् । तदुक्तमन्यत्र—

वकारस्त्रिविधो ज्ञेयो गुरुर्लघुर्लघुतरः ।
आदिर्गुरुर्लघुर्मध्ये पदान्ते च लघुतरः ॥ इति ।

यथा—वायवस्थ, सविता, देवः, इत्यादि ॥

अथ मूर्धन्योष्मणोऽसंयुक्तस्य टुमूने संयुक्तस्य च खकारोच्चारणम् ॥ ७ ॥

अथो—अन्तस्थादेशकथनानन्तरम् मूर्धन्योष्मणः—षकारस्य असंयुक्तस्य, टुं टवर्गयोगं विना संयुक्तस्य च खकारोच्चारणं कर्तव्यमित्युपदिश्यते । यथा—सहस्रशीर्षा पुरुषः, विमर्ष्ये स्तवे, आप्यायचेत्यादौ । टवर्गयोगे सत्युष्टम् , कृष्णोऽसि, श्रेष्ठतमायेत्यादौ तु न भवति ।

अध्ययनादिकर्मस्वर्थवेलायां प्रकृत्या ॥ ८ ॥ एते पूर्वोक्ताः स्वराः संस्काराश्च अध्ययनादिकर्मस्वेवेति नियम्यते । अध्ययनादीति आदिना यजनयाजनाध्यापनादिपरिग्रहः । मन्त्रार्थवेलायान्तु प्रकृत्या प्रकृतिरूपेणैवोच्चारणम् । क० ॥ २ ॥

अथानुस्वारस्य ँ इत्यादेशः शषसहरेफेषु, तस्य त्रैविध्यमाख्यातं ह्रस्वदीर्घगुरुभेदैः, दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः, परसवर्णोऽप्रकृत्या-चान्यत्र ॥१॥ अथ—ऊष्मादेशोपदेशानन्तरं शषसहरेफेषु वर्णेषु

परेषु अनुस्वारस्य स्थाने ँ इत्यादेशः । तस्य ँकारस्य त्रैविध्यं ह्रस्वदीर्घगुरुभेदैः । ह्रस्वात्-एकमात्रिकात्परो दीर्घो, दीर्घाद्-द्विमात्रिकात्परो ह्रस्वः, गुरौ-संयुक्ताक्षरे परे गुरुर्बोध्यः । यद्यपि दीर्घोऽपि गुरुर्भवति तथापि संयोगे परे ह्रस्वस्यापि गुरुसंज्ञाविधानात् ह्रस्वात्परस्यापि संयोगे परे गुरुत्वविधानात्ततो विशेषः । यथा—त्रिँशद्धामेत्यादौ ह्रस्वात्परो दीर्घः, पृथिव्याँशतेन पाशैरित्यादौ दीर्घात्परो ह्रस्वः कल्पन्ताँश्रोत्रम्, सोमानँस्वरणम् इत्यादौ संयोगे परे ह्रस्वाद्दीर्घाच्च परो गुरुः ।

अन्यत्र शषसहरेफपरत्वाभावे परा अनुस्वारात्परा तत्सवर्णा या ईषत्प्रकृतिः तथा उच्चारणम् । अर्थात् परत्र विद्यमानवर्णवर्गीयपञ्चमवर्णसदृशमुच्चारणं कर्तव्यमिति फलति ॥

विसर्गेऽप्यीषद् विरामः ॥ २ ॥ विसर्गेषु अः इत्यादिषु ईषत् विरामः किञ्चिद्विरम्यते, विसर्गस्य स्पष्टोच्चारणार्थम् ।

पदाद्यस्यासंयुक्ताकारस्येषद्दीर्घता च भवतीषद्दीर्घता च भवति ॥ ३ ॥ पदादौ विद्यमानस्यासंयुक्तस्य व्यञ्जनायुक्तस्य अकारस्येषद्दीर्घता भवति । अश्मन्नूर्जमित्यत्र शकारात्पूर्वः अकारः ईषद्दीर्घो न भवति संयुक्तत्वात् । पदादौ विद्यमानस्येत्युक्त्या गोपताविस्यादौ पकारोत्तराकारस्य न दीर्घता । अकारस्येत्युक्त्या च विश्वादित्यादाविकारस्य न दीर्घता । किन्तु वसोः पवित्रमित्यादौ वकाराकारस्य पकाराकारस्य च दीर्घता । तथाच तयोः ईषद्दीर्घोच्चारणं यथा भवति तथा पठनीयम् । एवमन्यत्रापि बोध्यम् । अन्ते द्विरभ्यासः परिसमाप्त्यर्थः । कं० ॥ ३ ॥

इति कात्यायनकृतपरिशिष्टसूत्रस्य (प्रतिज्ञासूत्रस्य) व्याख्यानम् ॥

शम् ।